## ॥ अथ अदितिदेवी सूक्तम् ॥

**ऋषिका दाक्षायणीः अदितिर्वा । छन्दः अनुष्टुप् । देवता अदितिदेवीः ॥**

अदितिर्न उरुष्यत्वदितिश्शर्म यच्छतु ।

अदितिः पात्वꣳहसः ॥ १

महीमू षु मातरꣳ सुव्रतानामृतस्य पत्नीमवसे हुवेम ।

तुविक्षत्रामजरन्तीमुरूचीꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ॥२

सुत्रामाणं पृथिवीन्द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ।

दैवीन्नावꣳ स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥३

अदितिर्द्यौरदितिरन्तरिक्षम् । अदितिर्माता स पिता स पुत्रः ।

विश्वे देवा अदितिः पञ्चजनाः । अदितिर्जातमदितिर्जनित्वम् ॥४

अष्टौ पुत्रासो अदितेः । ये जातास्तन्वः परि ।

देवांꣳ उप प्रैत्सप्तभिः । परा मार्ताण्डमास्यत् ॥५

सप्तभिः पुत्रैरदितिः । उप प्रैत्पूर्व्यं युग म् ।

प्रजायै मृत्यवे तत् । परा मार्ताण्डमाभरदिति ॥६

ताननुक्रमिष्यामः । मित्रश्च वरुणश्च । धाता चार्यमा च ।

अꣳशश्च भगश्च । इन्द्रश्च विवस्वाꣳश्चेत्येते ॥७

## ॥ अथ दक्षिणादेवी सूक्त्तम् ॥

**ऋषिका दक्षिणा प्रजापत्याः । छन्दः त्रिष्टुप् । देवता दक्षिणादेवीः ॥**

आविरभून् महि माघोनमेषां विश्वं जीवं तमसो निरमोचि ।
महि ज्योतिः पितृभिर्दत्तमागादुरुः पन्था दक्षिणाया अदर्शि ॥१
उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥२
दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो नहि ते पृणन्ति ।
अथा नरः प्रयत दक्षिणासो ऽवद्यभिया बहवः पृणन्ति ॥३
शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते हविः ।
ये पृणन्ति प्र च यच्छन्ति संगमे ते दक्षिणां दुहते सप्तमातरम् ॥४
दक्षिणावान् प्रथमो हूत एति दक्षिणावान् ग्रामणीरग्रमेति ।
तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय ॥५
तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम् ।
स सुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥६
दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम् ।
दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन् ॥७
न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः ।
इदं यद्विश्वं भुवनं स्वश्चै तत् सर्वं दक्षिणैभ्यो ददाति ॥८ ॥ ३२ ॥

## ॥ इति चतुर्वेदीय विश्वकर्म संहिता कर्म काण्डः॥ ऋग्ःसं ९३॥

## ॥ अथ चतुर्वेदीय विश्वकर्म संहिता ऋषि काण्डः २॥

### ॥ अथ प्रथमं अनुवाकः विश्वकर्मऋषि मन्त्रः॥

**ऋषिः अश्विनौ। छन्दः त्रिष्टुप्। देवता विश्वकर्म ऋषिः॥**

ऊर्मिर्द्रप्सो अपामसि **विश्वकर्मा** त ऋषिः।

अश्विनाध्वर्यू सादयतामिह त्वा॥ विश्वकर्मर्षि इदँ न मम॥ १

### ॥ अथ द्वितीयं अनुवाकः विश्वकर्म सप्तऋषि मन्त्रः॥

**ऋषिः अथर्वणः भृगुः। छन्दः जगती। देवता विश्वकर्म सप्तर्षिः॥**

**विश्वकर्मा** मा सप्त ऋषिभिरुदीच्या दिशः पातु तस्मिन्क्रमे

तस्मिन्छ्र्ये तां पुरं प्रैमि। स मा रक्षतु स मा गोपायतु तस्मा आत्मानं

परि ददे स्वाहा। विश्वकर्म सप्तर्षि इदँ न मम॥ २

**विश्वकर्माणं** ते सप्तऋषि वन्तं ऋच्छन्तु।

ये माऽघायव उदीच्या दिशोऽभिदासात् स्वाहा।

विश्वकर्म सप्तर्षि इदँ न मम॥ ३

## ॥ अथ तृतीयं अनुवाकः पंचऋषि मन्त्रः ॥

### अथ कृष्णयजुर्वेदीय तैत्तिरीय संहिता ४ ।३ ।३ ॥

**ऋषिः उशानः काव्यः । छन्दः स्वराड्ब्रह्मी जगतीः । देवता प्राणः ॥**

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणयनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रदुपाꣳशु रुपाꣳशो स्त्ररिवृत्स्त्ररिवृतो रथन्तरꣳ रथन्तराद् वसिष्ठ **ऋषिः** । प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः स्वाहा ॥ प्रजापतिर्विश्वकर्मणे इदँ न मम ॥ १

**ऋषिः उशानः काव्याः । छन्दः निचृदतिधृतिः । देवता मनः ॥**

अयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ एडमैडादन्तर्यामोऽन्तर्यामात्पञ्जदशः पञ्जदशाद्बृहद्बृहतो **भरद्वाज ऋषिः** । प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यः स्वाहा ॥ प्रजापतिर्विश्वकर्मणे इदँ न मम ॥ २

**ऋषिः उशानः काव्याः । छन्दः निचृदतिधृति । देवता चक्षुः ॥**

अयं पश्याद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्षमं ऋक्षमाच्छुक्रः शुक्राथ्सप्तदशः सप्तदशाद्वैरूपं वैरूपाद् **विश्वामित्र ऋषिः** । प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः स्वाहा ॥ प्रजापतिर्विश्वकर्मणे इदँ न मम ॥ ३

**ऋषिः उशानः काव्याः । छन्दः स्वराड्ब्रह्मी त्रिष्टुप् । देवता श्रोत्रः ॥**

इदमुत्तराथ्सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभः स्वारꣳ

स्वारान्मन्ती मन्तिन एकविꣳश एकविꣳशाद्वैराजं वैराजाज् **जमदग्निर्ऋषिः** ।

प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः स्वाहा ॥

प्रजापतिर्विश्वकर्मणे इदँ न मम ॥ ४

**ऋषिः उशानः काव्याः । छन्दः विराडाकृतिः । देवता वाचस्पतिः ॥**

इयमुपरि मतिस्तस्यै वाङ्माती हेमन्तो वाच्यायनः पङ्क्तैहैमन्ती पङ्क्त्य

निधनवन्निधनवत आग्रयण आग्रयणात्त्रिणवत्त्रियस्त्रिꣳशौ त्रिणव

त्रियस्त्रिꣳशाभ्याꣳ शाक्वररैवते शाक्वररैवताभ्यां **विश्वकर्म ऋषिः** ।

प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः स्वाहा ॥

प्रजापतिर्विश्वकर्मणे इदँ नमम ॥ ५

## अथ चतुर्त अनुवाकः पंचब्रह्मऋषि मन्त्रः ॥

## अथ कृष्णयजुर्वेदीय तैत्तिरीय संहिता ४ ।३ ।३ ॥

**ऋषिः विश्वकर्मा भौवनः । छन्दः निचृद् त्रिष्टुप् । देवताः ब्रह्मऋषिः ॥**

प्राची दिशां वसन्त ऋतुनामग्निर्देवता ब्रह्म त्रविणं त्रिवृथ्स्तोमः स उ पञ्जदश

वर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः **सानग ऋषिः** । पितरः पितामहाः

परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां

पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा॥ विश्वकर्मणे इदं न मम॥ १॥

दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्रं त्रविणं पञ्जदशः स्तोमः स उ सप्तदश वर्तोनिर्दित्य वाड् व्यस्त्रेताऽयानां दक्षिणाद्वातो वातः **सनातन ऋषिः**। पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा॥ विश्वकर्मणे इदं न मम॥ २॥

प्राची दिशां वर्षा ऋतूनां विश्वेदेवा देवाता विड् त्रविण॑ सप्तदशः स्तोमः स उ एकवि॑श वर्तोनिस्त्रिवथ्सो वयो द्वापरोऽयानां पश्चाद्वातो वातः **अहभुन ऋषिः**। पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामा शिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा॥ विश्वकर्मणे इदं न मम॥३॥

उदीशी दिशा॑ शरदृतूनां मित्रावरुणौ देवता पुष्टं त्रविणमेकवि॑शः स्तोमः स उ त्रिणववर्तोनिस्तुर्य वाड्वय आस्कन्दो ऽयानामुत्तराद्वातो वातः **प्रत्न ऋषिः**। पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां स्वाहा॥ विश्वकर्मणे इदं न मम॥ ४ ॥

ऊर्ध्वा दिशा॑ हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो त्रविणं त्रिणवः स्तोमः स उ त्रयस्त्रि॑शवर्तोनिः पष्ठवाद्वयोऽभिभुरयानां विष्वग्वातो वातः

**सुपर्ण ऋषिः** । पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन्
ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्यां
स्वाहा ॥ विश्वकर्मणे इदं न मम ॥ ५॥

**अथ पंचमं अनुवाकः पंचब्रह्मऋषि मन्त्रः ॥**

## अथ कृष्णयजुर्वेदीय मैत्रायणी संहिता २।७।२०॥

प्राचीदिग् वसन्तऋतु रग्निर्देवता ब्रह्मद्रविणं गायत्रीछन्दो रथन्तरँसाम
त्रिवृत्स्तोमः स उ पंजदशवर्तनिः **सानगा ऋषि** स्त्र्यविर्वयः कृतमयानां
पुरोवातो वातः। पितरः पितामहाः परो ऽवरे ते नो ऽवन्तु ते नः पान्त्वस्मिन्
ब्रह्मणयस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यां देवहूतौ स्वाहा ॥
विश्वकर्मणे इदं न मम ॥ १

दक्षिणादिग् ग्रीष्मऋतु रिंद्रोदेवता क्षत्रंद्रविणं त्रिष्टुप्छन्दो बृहत्साम पंजदशः
स्तोमः स उ सप्तदश वर्तनिः **सनातना ऋषि** र्दित्यवाड्वय स्त्रेतायानां
दक्षिणाद्वातो वातः। पितरः पितामहाः परो ऽवरे ते नो ऽवन्तु ते नः
पान्त्वस्मिन् ब्रह्मणयस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यां देवहूतौ
स्वाहा ॥ विश्वकर्मणे इदं न मम ॥ २

प्रतीचीदिग् वर्षाऋतु र्विश्वेदेवादेवता विड्द्रविणं जगतीछन्दो वैरूपँसाम
सप्तदशः स्तोमः स उ एकविँश वर्तनिः **अहभूना ऋषि** स्त्रिवस्तो वयो द्वापरो

ऽयानां पश्चाद्वाता वातः। पितरः पितामहाः परो ऽवरे ते नो ऽवन्तु ते नः
पान्त्वस्मिन् ब्रह्मणत्रस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यां देवहूतौ
स्वाहा॥ विश्वकर्मणे इदं न मम॥ ३

उदीचीदिग् शरदृतु मित्रावरुणदेवता पुष्टंद्रविणं अनुष्टुप्छन्दो वैराजँसाम
एकविँशः स्तोमः स उ त्रिणववर्तनिः **प्रत्न ऋषि** स्तुर्यवाड्वयो ऽभिभवो
ऽयानामुत्तराद्वातो वातः। पितरः पितामहाः परो ऽवरे ते नो ऽवन्तु ते नः
पान्त्वस्मिन् ब्रह्मणत्रस्यां पुरोधायामस्मिन् कर्मण्यस्यामाशिष्यां देवहूतौ
स्वाहा॥ विश्वकर्मणे इदं न मम॥४

ऊर्ध्वादिग् घेमन्तशिशिराऋतू बृहस्पतिर्देवता फलंद्रविणं पंक्तिश्छन्दः
शाक्वररैवते सामनि त्रिणवः स्तोमः स उ त्रयस्त्रिँशवर्तनिः सुपर्णा ऋषिः
पष्ठवाड्वय आस्कन्दो ऽयानामुपरिष्टाद्वातो वातः। पितरः पितामहाः परो
ऽवरे ते नो ऽवन्तु ते नः पान्त्वस्मिन् ब्रह्मणत्रस्यां पुरोधायामस्मिन्
कर्मण्यस्यामाशिष्यां देवहूतौ॥ विश्वकर्मणे इदं न मम॥ ५

### अथ षष्ठमं अनुवाकः पंचब्रह्मऋषि मन्त्रः॥

### अथ कृष्णयजुर्वेदीय चरककाठक संहिता ३९।७।४५॥

प्राची दिग्गायत्री छन्दो रथन्तरॅसामाग्निर्देवता वसन्त ऋतुस्त्रिवृत्स्तोमः
पञ्जदश वर्तनिस्त्रयविर्वयः कृतमयानां पुरोवातो वातः **सानग ऋषिः**। पितरः

पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नो ऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां । ब्रह्मणा तेनच्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा सीद स्वाहा ॥ विश्वकर्मणे इदं न मम ॥ १ ॥

दक्षिणा दिक् त्रिष्टुप् छन्दो बृहत्सामेन्द्रो देवता ग्रीष्म ऋतुः पञ्जदशस्स्तोम स्सप्तदश वर्तनिर्दित्य वाङ् वयस्त्रेतायानां दक्षिणाद्वातो वातः **प्रत्न ऋषिः** । पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां । ब्रह्मणा तेनच्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा सीदत स्वाहा ॥ विश्वकर्मणे इदं न मम ॥ २ ॥

प्रतीची दिग्जगती छन्दो वैरूपꣳसाम मरुतो देवता वर्षा ऋतुस्सप्तदशस्स्तोम एकविꣳश वर्तनिस्त्रिवत्सो वयो द्वापरोऽयानां पश्चाद्वातो वातः **सनातन ऋषिः** । पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां । ब्रह्मणा तेनच्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा सीदत स्वाहा ॥
विश्वकर्मणे इदं न मम ॥ ३ ॥

उदीशी दिगनुष्टुप् छन्दो वैराजꣳसाम विश्वेदेवा देवता शरदृतुरेकविꣳश स्तोम स्त्रिणव वर्तनिस्तुर्य वाड्वय आस्कन्दो ऽयानामुत्तराद्वातो वातः **अहभून ऋषिः** । पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां । ब्रह्मणा

तेनच्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा सीदत स्वाहा ॥

विश्वकर्मणे इदं न मम ॥ ४ ॥

ऊर्ध्वा दिक् पङ्क्तिश्छन्दश्श शाक्वरं रैवतꣳसाम मित्रावरुणौ देवता हेमन्त शिशिरावृतू त्रिणवः स्तोमस्त्रयस्त्रिꣳशवर्तनिः पष्ठवाद्वयो ऽभिभुरयानां विष्वग्वातो वातः **सुपर्ण ऋषिः**। पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नो ऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां । ब्रह्मणा तेनच्छन्दसा तया देवतयाङ्गिरस्वद् ध्रुवा सीदत स्वाहा ॥

विश्वकर्मणे इदं न मम ॥ ५ ॥

## ॥ अथ ब्रह्मादि गण निरूपणं ॥

### अथ ब्रह्मगणः ॥

**ऋषिः पुरुच्छेप दैवादासिः। छन्दः त्रिष्टुप्। देवता पूर्व मनुः ॥**

दध्यङ् ह मे जनुषं पूर्वो अङ्गिराः प्रियमेधः कण्वो
अत्रिर्मनुः विदुस्ते मे पूर्वे मनुर्विदुः ॥ १

**ऋषिः गोतमः राहूगणः। छन्दः पङ्क्ति। देवता अथर्वण मनुश्च ॥**

यां अथर्वा मनुष् पिता दध्यङ् धियमत्नत ।
तस्मिन् ब्रह्माणि पूवथेन्द्र उक्था समग्मतार्चन्ननु स्वयाज्यं ॥ २

**ऋषिः यमः विवस्वान्। छन्दः त्रिष्टुप्। देवता पूर्व पितृः ॥**

अङ्गिरसो नः पितरो नवग्वा अथर्वणे भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ३

## अथ अङ्गिरोगणः ॥

**ऋषिः हिरण्यस्तूपः आङ्गिरसः । छन्दः जगती । देवता पूर्व आङ्गिरसः ॥**

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ ४

**ऋषिः प्रस्कण्वः अङ्गिरसः । छन्दः अनुष्टुप् । देवता प्रियमेधः प्रस्कण्वः आङ्गिरस च ॥**

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवं ॥ ५

**ऋषिः नाभानेदिष्ठः मनुः । छन्दः अनुष्टुप् । देवता विरूपः अङ्गिरसः ॥**

विरूपास इदृषयस्त इद्गंभीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥ ६

## अथ भृगुगणः ॥

**ऋषिः वत्सप्रियः भालन्दनः । छन्दः त्रिष्टुप् । देवता त्वष्ट्रा भार्गवः ॥**

द्यावा यमग्निं पृथिवीं जनिष्टामापः त्वष्टा भृगवो यं सहोभिः ।
ईळेन्यं प्रथमं मातरिश्वा देवाः ततक्षुर्मनवे यजत्रं ॥ ७

**ऋषिका घोषा काक्षीवतीः । छन्दः जगती । देवता च्यवानः ॥**

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ॥

निष्टौग्रयमूहथुरुद्वयस्परि विश्वेत् ता वां सवनेषु प्रवाच्या ॥ ८

**ऋषिका घोषा काक्षीवती। छन्दः जगती। देवता भृगुः॥**

एतं वां स्तोमं अश्विनावकर्मा तक्षाम भृगवो न रथं।
न्यमृक्षाम योषणं न मर्ये नित्यं न सूनुं तनयं दधानाः ॥ ९

## अथ ऋभुगणः ॥

**ऋषिः प्रचेतः अङ्गिरसः। छन्दः जगती। देवता सुधन्वाङ्गिरसः॥**

इदं तृतीयꣳ सवनं कवीनां ऋतेन ये चमसमैरयन्त।
ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु ॥ १०

**ऋषिः कुत्सः अङ्गिरसः। छन्दः जगती। देवता ऋभवः॥**

विष्टवी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः॥ ११

**ऋषिः वामदेवः गोतमः। छन्दः त्रिष्टुप्। देवता ऋभुर्विभ्वान्वाजः॥**

आपो ह्येषामजुषन्त देवा अभि क्रत्वा मनसा दीध्यानाः।
वाजो देवानामभवत् सुकर्मेन्द्रस्य ऋभुक्षा वरुणस्य विभ्वा ॥ १२

## ॥ अथ ऋग्वेदीय विश्वकर्म पूर्वऋषि होमः ॥

**ऋषिः मधुच्छन्दः वैश्वामित्रः। छन्दः गायत्री। देवता सानगऋषिः॥**

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवाꣳ एह वक्षति ॥

अग्नये वासन्तिकाय गायत्राय त्रिवृते राथन्तराय ।

विश्वे वैश्वानारा विश्वे विश्वमहस इह मावत ।

अस्मिन् ब्रह्मण्यस्मिन् क्षत्रे अस्मिन् कर्मण्यस्यामाशिष्यास्यां

प्रतिष्ठायामस्यां देवहूत्यां सानगाय स्वाहा ॥ १४

**ऋषिः वसिष्ठः मित्रावरुणौः । छन्दः त्रिष्टुप् । देवता सनातनऋषिः ॥**

ये च पूर्व ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः ।

अस्मे ते सन्तु सरव्या शिवानि यूयं पात स्वस्तिभिः सदा नः ॥

इन्द्राय ग्रैष्माय त्रैष्टुभाय पञ्चदशाय बार्हताय ।

विश्वे वैश्वानारा विश्वे विश्वमहस इह मावत ।

अस्मिन् ब्रह्मण्यस्मिन् क्षत्रे अस्मिन् कर्मण्यस्यामाशिष्यास्यां

प्रतिष्ठायामस्यां देवहूत्यां सनातनाय स्वाहा ॥ १५

**ऋषिः यज्ञः प्रजापतिः । छन्दः त्रिष्टुप् । देवता अहभूनऋषिः ॥**

चाक्लृप्रे तेन ऋषयो मनुष्या यज्ञे जाते पितरो नः पुराणे ।

पश्यन् मन्ये मनसा चक्षसा तान् य इमं यज्ञमयजयन्त पूर्वे ॥

विश्वेभ्यो देवेभ्यो वार्षिकेभ्या जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यां ।

विश्वे वैश्वानारा विश्वे विश्वमहस इह मावत ।

अस्मिन् ब्रह्मण्यस्मिन् क्षत्रे अस्मिन् कर्मण्यस्यामाशिष्यास्यां

प्रतिष्ठायामस्यां देवहूत्यां अहभूनाय स्वाहा ॥ १६

**ऋषिः अपवत्सरः कश्यपः । छन्दः जगती । देवता प्रत्नऋषिः ॥**

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदं ।

प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे ॥

मित्रावरुणभ्यां शारदाभ्यां अनुष्टुभाभ्यां एकविंशांभ्यां वैराजाभ्यां ।

विश्वे वैश्वानारा विश्वे विश्वमहस इह मावत ।

अस्मिन् ब्रह्मण्यस्मिन् क्षत्रे अस्मिन् कर्मण्यस्यामाशिष्यास्यां

प्रतिष्ठायामस्यां देवहूत्यां प्रत्नाय स्वाहा ॥ १७

**ऋषिः प्रतिरथः आत्रेयः । छन्दः त्रिष्टुप् । देवता सुपर्णऋषिः ॥**

उक्षा समुद्रो अरुषः सुपर्णः पूर्वस्य योनिं इंपतुरा विवेश ।

मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसस्पात्यन्तौ ॥

बृहस्पतये हैमन्तिकाय पाङ्क्ताय त्रिणवाय शाक्वराय

सवित्रे शैशिरायातिच्छन्दसाय त्रयस्त्रिंशाय रैवतायां ।

विश्वे वैश्वानारा विश्वे विश्वमहस इह मावत ।

अस्मिन् ब्रह्मण्यस्मिन् क्षत्रे अस्मिन् कर्मण्यस्यामाशिष्यास्यां

प्रतिष्ठायामस्यां देवहूत्यां सुपर्णाय स्वाहा ॥ १८

**॥ इति चतुर्वेदीय विश्वकर्म संहिता ऋषि काण्डः ॥ ऋग् सं ३८ ॥**

# ॥ अथ विश्वकर्म संहिता यज्ञ काण्डः ३ ॥

## अथ प्रथमं अनुवाकः ऋग्वेदीय विश्वकर्म महाहोमः ॥

**ऋषिः विश्वकर्मा । छन्दः त्रिष्टुप् ।स्वरःधैवतः । देवता विश्वकर्मा ॥**

य इमा विश्वा भुवनानि जुह्वदृषिहोता निषासादा पिता नः ।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेशा ॥ १
किंस्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥ २
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत उत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३
किंस्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन् ॥४
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं वृधानः ॥५
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघावा सूरिरस्तु ॥ ६
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॥ ७

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने।
यदेदन्ता अददृ॑ हन्त पूर्व आदिद् द्यावापृथिवी अप्रथेतां॥ ८
विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक्।
तेषामिष्टानि समिषा मदन्ति यत्र सप्त ऋषीन्पर एकमाहुः॥ ९
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तँ॑ सं प्रश्नं भुवना यन्त्यन्या ॥ १०
त आयजन्त द्रविणँ समस्मा ऋषयः पूर्वे जरितारो न भूना।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि॥ ११
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति।
क॑ स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ॥ १२
तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः॥ १३
न तं विदाथ य इमा जजाना ऽन्यद्युष्माकमन्तरं बभूव।
नीहारेण प्रावृता जल्प्या चा ऽसुतृप उक्थशासश्चरन्ति॥ १४

समुद्राय वैणवे नमो । वरुणाय धर्मपतये नमो। नमः सर्वाभ्यो नदीभ्यः॥ १५॥
सर्वासां पित्रे विश्वकर्मणे । दत्त॑ हविर्जुषतां॥ १६॥
विराट्पुरुषाय विद्महे । विश्वकर्मणय धीमहि। तन्नो परब्रह्मः प्रचोदयात्॥ १७॥

## अथ द्वितीयं अनुवाकः कृष्णयजुर्वेदीय विश्वकर्म महाहोमः ॥

**ऋषिःविश्वकर्मा भौवनः। छन्दः त्रिष्टुप्। देवता विश्वकर्मा॥**

य इमा विश्वा भुवनानि जुह्वदृषिहोता निषासादा पिता नः।
स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ विवेशा ॥ १
विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक्।
तेषामिष्टानि समिषा मदन्ति यत्र सप्तर्षीन्पर एकमाहुः॥ २
यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान।
यो देवानां नामधा एक एव तꣳ सं प्रश्नं भुवना यन्त्यन्या ॥ ३
त आ ऽयजन्त द्रविणꣳ समस्मा ऋषयः पूर्वे जरितारो न भूना।
असूर्ता सूर्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि॥ ४
न तं विदाथ य इदं जजाना ऽन्यद्युष्माकमन्तरं भवाति।
नीहारेण प्रावृता जल्प्या चा ऽसुतृप उक्थशासश्चरन्ति॥ ५
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्गुहायत्।
कꣳ स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ॥ ६
तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधि श्रितं॥ ७
विश्वकर्मा ह्यजनिष्ट देव आदिद् गन्धर्वो अभवद् द्वितीयः।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥ ८

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने।
यदेदन्ता अददृꣳ हन्त पूर्व आदिद् द्यावापृथिवी अप्रथेतां॥ ९
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात्।
सं बाहुभ्यांनमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः॥ १०
किꣳ स्विदासीदधिष्ठानमारं भणं कतमथ् स्वित्किमासीत्।
यदी भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः॥ ११
किꣳ स्विद्वनं क उ वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन्न्॥ १२
या ते धामानि परमाणि या ऽवमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं जुषाणः॥ १३
वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे अद्या हुवेम।
स नो नेदिष्ठा हवनानि जोषते विश्वशं भूरवसे साधुकर्मा॥ १४
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तनुवं जुषाणः।
मुह्यन्त्वन्ये अभितः सपत्ना इहा ऽस्माकं मघवा सूरिरस्तु॥ १५
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यं।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथा ऽसत्॥ १६

समुद्राय वयुनाय सिन्धूनां पतये नमः ।
नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳहविः ॥ १७

यज्ञपतिमृषय एनसाऽऽहुः प्रजा निर्भक्ता अनुतप्यमाना ।
मधव्यौ स्तोकावप तौ रराध सं नस्ताभ्याँ सृजतु विश्वकर्मा ॥१८
घोरा ऋषयो नमो अस्त्वेभ्यः चक्षुष एषां मनसश्च सन्धौ ।
बृहस्पतये महि षद्द्युमन्नमः नमो विश्वकर्मणे स उ पात्वस्मान् ॥ १९
अनन्यान्त्सोमपान्मन्यमानः प्राणस्य विद्वान्त्समरे न धीर ।
एनश्चकृवान्महि बद्ध एषां तं विश्वकर्मन्प्र मुञ्चा स्वस्तये ॥ २०
ये भक्षयन्तो न वसून्यानृहुः यानग्नयोऽन्वतप्यन्त धिष्णिया ।
इयं तेषामवया दुरिष्ट्यै स्विष्टिं नस्तां कृणोतु विश्वकर्मा ॥ २१
नमः पितृभ्यो अभि नो अरव्यन्यज्ञकृतो यज्ञकामाः ।
सुदेवा अकामा वो दक्षिणां न नीनिम नस्तस्मादेनसः पापयिष्ट ॥ २२

यदाकूतात्समसुस्त्रोद्धृदो वा मनसा वा सम्भृतं चक्षुषो वा ।
तमनु प्रेहि सुकृतस्य लोकं यत्रर्षयः प्रथमजा ये पुराणाः ॥ २३
एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः ।
अन्वागन्ता यज्ञपतिर्वो अत्र तँस्म जानीत परमेव्योमन् ॥ २४

जानीतादेनम्परमे व्योमन्देवाः सधस्था विद रूपमस्य ।
यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै ॥ २५
सम्प्र च्यवध्वमनु सम्प्र यातागने पथो देवयानान्कृणुध्वम् ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत ॥ २६
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा ।
ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ॥ २७
यदिष्टम्यत्परादानं यद्दत्तं या च दक्षिणा ।
तदग्निर्वैश्वकर्मणः सुवर्देवेषु नोदधत् ॥ २८
येना सहस्रं वहसि येनाग्ने सर्ववेदसम् ।
तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ॥ २९
येनाग्ने दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः ।
तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ॥ ३०
येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः ।
तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे ॥ ३१
यत्र धारा अनपेता मधोर्घृतस्य च याः ।
तदग्निर्वैश्वकर्मणः सुवर्देवेषु नोदधत् ॥ ३२

**ऋषिः वसिष्ठः विश्वकर्मा च । छन्दः जगती । देवता विश्वकर्मा ॥**

चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन् ।

वीतिहोत्रा ऋतावृधः ॥ ३३

समुद्रस्य वयुनस्य पत्मञ्जुहोमि विश्वकर्मणे ।

विश्वाहामर्त्यँ हविः ॥ ३४

समुद्राय वैणवे सिन्धूनां पतये नमः ।

नमो नदीनाँ सर्वासाँ पत्ये ।

विश्वाहा जुषताँ विश्वकर्मणामिदँ हविः । स्वः स्वाहा ॥३५

## अथ तृतीयं अनुवाकः सामवेदीय विश्वकर्म महाहोमः ॥

**ऋषिः वामदेवः गोतमः । छन्दः अनुष्टुप् । देवता प्रजापतिः ॥**

२ ३ २ ३ २ ३ १ २र ३ २ ३ १ १र

मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः ।

३ २ ३ १ २ ३ १ २र

परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥ १

**ऋषिः नृमेधः आङ्गिरसः । छन्दः उष्णिक् । देवता विश्वकर्मा ॥**

१ २ ३ १२ ३ १ २ र

त्वमिन्द्राभिभूरसि त्वꣳसूर्यमरोचयः ।

३ १ २ ३ १ २ ३ १ २

विश्वकर्मा विश्वदेवो महाँ असि ॥ २

**ऋषिः विश्वकर्मा भौवनः। छन्दः त्रिष्टुप्। देवता विश्वकर्मा॥**

१ २ ३ १ २ ३ २ ३ १ २ ३ २क १ २र

विश्वकर्मन् हविषा वावृधान स्वयं यजस्व तन्वइँ स्वा हिते।

१ २ ३ २ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २

मुहयन्त्वन्ये अभितो जनास इहास्माकं मघावा सूरिरस्तु॥ ३

**ऋषिः वामदेव गौतमः। छन्दः त्रिष्टुप्। देवता विश्वकर्मा**

ॐ इदमहमिमँ विश्वकर्माँ श्रीवत्समभि जुहोमि स्वाहा॥

विश्वकर्मणे इदं न मम॥ ४

==========================================

**ऋषिः परमेष्ठिः। छन्दः अनुष्टुप्। देवता प्रजापतिः। गानः ऊहं॥**

२र र र १ - १ - १

हाउहाउहाउ। आनोऽ२ ब्रुवाइ। आनोऽ२ ब्रुवाइ।

- १ ३ ४र र १ २ र र ३ १ १ १

आनोऽ२ ब्रुवाऽ२। याऽ२३४औहोवा। रक्षतनोरक्षिताराऽ२३ ४ ५ः।

२र र र १ - १ - १

हाउहाउहाउ। आनोऽ२ ब्रुवाइ। आनोऽ२ ब्रुवाइ।

- १ ‸ ३ ४र र २र र१ २र र ३ १११

आनोऽ२ ब्रुवाऽ२। याऽ२३४औहोवा।गोपायतगोपाइताराऽ२३ ४ ५ः।

१२१२ १ २ - १२र १ २ -

मयिवर्च्चः। अथोयाऽ१शाऽ२ः॥ अथोयज्ञ। स्ययात्पाऽ१याऽ२ः॥

२र १र १२ - २१र १ २

परमेष्ठी। प्रजापाऽ१तीऽ२ः॥ दिविद्यामि। वदृꣳहाऽ१तूऽ२३।

२र र र १ - १ - १

हाउहाउहाउ। आनोऽ२ ब्रुवाइ। आनोऽ२ ब्रुवाइ।

- १ ‸ ३ ४र र १ २र र ३ १ ११

आनोऽ२ ब्रुवाऽ२। याऽ२३४औहोवा। रक्षतनोरक्षिताराऽ२३ ४ ५ः।

२र र र १ - १ - १

हाउहाउहाउ। आनोऽ२ ब्रुवाइ। आनोऽ२ ब्रुवाइ।

- १ ‸ ३ ४र र २र र१ २र र ३ १११

आनोऽ२ ब्रुवाऽ२। याऽ२३४औहोवा। गोपायतगोपाइताराऽ२३ ४ ५ः।

२र र र १ - १ - १

हाउहाउहाउ। आनोऽ२ ब्रुवाइ। आनोऽ२ ब्रुवाइ।

- १ ‸ ३ ४र र

आनोऽ२ ब्रुवाऽ२। याऽ२३४औहोवा।

२र १ २ र र र र १ २र र र

ए ।रक्षतनोरक्षितारोगोपायतगोपायितारः ।

२र १ २ र र र र १ २र र र

ए ।रक्षतनोरक्षितारोगोपायतगोपायितारः ।

२र १ २ र र र र १ २र र र ३ १ १ १

ए ।रक्षतनोरक्षितारोगोपायतगोपायिताराऽ२३ ४ ५ः ॥

**सौमित्रम् ॥ सुमित्रः कुत्सः । उष्णिक् । विश्वकर्मा । गानः ऊहः ॥**

१ २र १र ३ १ १ १ १ र २र ३ १ १ १

त्वमिन्द्राभिभूरसीऽ २ ४ ५ । त्वꣳ सूर्यमरोचयाऽ २ ३ ४ ५ ः ॥

२ १ २र १ र ३ १ १ १ २ २ १र १११

विश्वकर्मा विश्वदेवा ऽ२ ३ ४ ५ ः । ए ऽ३ । महाँ असा ऽ२३४५इ ॥श्रीः ॥

==========================================

## अथ चतुर्त अनुवाकः अथर्वणवेदीय विश्वकर्म महाहोमः ॥

**ऋषिः अङ्गिरसा भृगुश्च । छन्दः त्रिष्टुप् । देवता विश्वकर्मा ॥**

यो विश्वचर्षणिरुत विश्वतोमुखो यो विश्वतस्पाणिरुत विश्वतस्पृथः ।

सं बाहुभ्यां भरति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥१

प्रजापति हविषा वर्धनेन हनतारमिन्द्रमकृणोरवध्यं ।

तस्मै विशो देवकृता नमन्तसहद्यन्तस्सहि हव्यो बभूव ॥२

स नः पिता जनिता स उत बन्धुर्धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तँ सं प्रश्नं भुवना यन्ति सर्वा ॥३

ये भक्षयन्तो न वसून्यानृधुर्यानग्नयो अन्वतप्यन्त धिष्ण्याः।
य तेषामवया दुरिष्टिः स्विष्टिं नस्तान्कृणवद् विश्वकर्मा ॥४
यज्ञपतिमृषय एनसाहुर्निर्भक्त्तं प्रजा अनुतप्यमानम्।
मथव्यान्त्स्तोकानप यान्रराध सं नष्टेभिः सृजतु विश्वकर्मा ॥५
अदान्यान्त्सोमपान्मन्यमानो यज्ञस्य विद्वान्त्समये न धीरः।
यदेनश्चकृवान्बद्ध एष तं विश्वकर्मान्प्र मुंजा स्वस्तये ॥६
घोरा ऋषयो नमो अस्त्वेभ्यश्चक्षुर्यदेषां मनसश्च सत्यम्।
बृहस्पतये महिष द्युमन् नमो विश्वकर्मन् नमस्ते पाह्यस्मान्॥७
यज्ञस्य चक्षुः प्रभृतिर्मुखं च वाचा श्रोत्रेण मनसा जुहोमि।
इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमानाः॥८

एतं सधस्थाः परि वो ददासि यं शेवधिमावहाज्जातवेदः।
अन्वागन्ता यजमानः स्वस्ति तं स्म जानीत परमे व्योऽमन्॥९
जानीत स्मैनं परमे व्योऽमन्देवाः सधस्था विद लोकमत्र।
अन्वागन्ता यजमानः स्वस्तीऽष्टापूर्तम्स्म कृणुताविरस्मै॥१०

येना सहस्रं वहसि येनाग्ने सर्व वेदसं।
तेनेमं यज्ञं नो वह स्वऽर्देवेषु गन्तवे ॥११

## अथ पंचमं अनुवाकः शुक्लजुर्वेदीय विश्वकर्म महाहोमाः ॥

**ऋषिः भुवन पुत्र विश्वकर्मा। छन्दः त्रिष्टुप्। देवता विश्वकर्मा॥**

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ२ आ विवेशा ॥ १
कि२ँ स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् कथासीत् ।
यतो भूमिं जनयन् विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः॥ २
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।
सं बाहुभ्यान्धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः॥ ३
कि२ँ स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन्॥४
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं वृधानः॥५
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्।
मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघावा सूरिरस्तु॥ ६
वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम।

स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॥ ७
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यं ।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथाऽसत् ॥ ८

चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नन्नमाने ।
यदेदन्ता अददृ॑ हन्त पूर्व आदिद् द्यावापृथिवी अप्रथेतां ॥ ९
विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक् ।
तेषामिष्टानि समिषा मदन्ति यत्र सप्त ऋषीन्पर एकमाहुः ॥ १०
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।
यो देवानां नामधा एक एव तँ॑ सं प्रश्नं भुवना यन्त्यन्या ॥ ११
त आयजन्त द्रविणँ समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ १२
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कँ॑ स्विद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त पूर्वे ॥ १३
तमिद् गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः ॥ १४
न तं विदाथ य इमा जजाना ऽन्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चा ऽसुतृप उक्थशासश्चरन्ति ॥ १५

विश्वकर्मा ह्यजनिष्ट देव आदिद् गन्धर्वो अभवद् द्वितीयः।
तृतीयः पिता जनितौषधीनामपां गर्भं व्यदधात्पुरुत्रा ॥ १६

यदाकूतात्समसुस्त्रोद्धृदो वा मनसो वा सम्भृतं चक्षुषो वा।
तमनु प्रेहि सुकृतामु लोकं यत्रर्षयो जग्मुः प्रथमजाः पुराणाः॥ १७
एत९ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः।
अन्वागन्ता यज्ञपतिर्वो अत्र तँ॑स्म जानीत परमेव्योमन्॥ १८
एतं जानाथ परमे व्योमन्देवाः सधस्था विद रूपमस्य।
यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै॥ १९
उद् बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते स९सृजेथामयंच।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत॥ २०
येन वहसि सहस्त्रं येनाग्ने सर्ववेदसम्।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे॥ २१
प्रस्तरेण परिधिना स्त्रुचा वेद्या च बर्हिषा।
ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे॥ २२
यद्दत्त९ यत्परादान९ यत्पूर्त९याश्च दक्षिणा।
तदग्निर्वै श्वकर्मणः स्वर्देवेषु नोदधत्॥ २३
यत्र धारा अनपेता मधोर्घृतस्य च याः।

तदग्निर्वै श्वकर्मणः स्वर्देवेषु नोदधत् ॥ २४

**ऋषिः वसिष्ठः विश्वकर्मा च । छन्दः जगती । देवता विश्वकर्मा ॥**

चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधः ।
पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्मणे विश्वाहादाभ्यꣳ हविः ॥ २५

## अथ षष्ठमं अनुवाकः महाऽऽहुति मन्त्रः ॥

**ऋषिः शासः भारद्वाजः । छन्दः त्रिष्टुप् । देवता विश्वकर्मा ॥**

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्या हुवेम ।
स नो विश्वानि हवनानि जोषद् विश्वशम्भूरवसे साधुकर्मा ॥
उपयाम गृहीतोऽसीन्द्राय त्वा **विश्वकर्मण** एष ते योनिरिन्द्राय
त्वा **विश्वकर्मणे** स्वाहा ॥ विश्वकर्मणे इदँ न मम ॥ १
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघावा सूरिरस्तु ॥
उपयाम गृहीतोऽसीन्द्राय त्वा **विश्वकर्मण** एष ते योनिरिन्द्राय
त्वा **विश्वकर्मणे** स्वाहा ॥ विश्वकर्मणे इदँ न मम ॥ २
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यं ।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथाऽसत् ॥

उपयाम गृहीतोऽसीन्द्राय त्वा **विश्वकर्मण** एष ते योनिरिन्द्राय
त्वा **विश्वकर्मणे** स्वाहा॥ विश्वकर्मणे इदँ न मम॥ ३

## अथ सप्तमं अनुवाकः आहुति महामन्त्रः॥

**ऋषिः सोमाहुतिः भार्गवः। छन्दः अनुष्टुप् । देवता विश्वकर्मा॥**

स बोधि सूरिर्मघावा वसुपते वसुदावन्।
युयोध्यस्मद् द्वेषाꣳसि **विश्वकर्मणे** स्वाहा॥ विश्वकर्मणे इदँ न मम॥ १

## अथ अष्टमं अनुवाकः पूर्णाहुति महामन्त्रः॥

**ऋषिः विश्वकर्मा भौवनः। छन्दः त्रिष्टुप्। देवता विश्वकर्मा॥**

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयञ्च जिन्व।
विश्वन्तद्भद्रꣳ यदवन्ति देवा बृहद्वदेम विदथे सुवीराः॥ १
य इमा विश्वा भुवनानि जुह् वदृषिहोता न्यसीदत्पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेशा ॥ २
विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक्।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन्पर एकमाहुः॥ ३
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा।
यो देवानां नामधा एक एव तꣳ सं प्रश्नं भुवना यन्त्यन्या ॥ ४

अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः।
प्रप्र दातारन्तारिष ऊर्जन्नो धेहि द्विपदे चतुष्पदे विश्वकर्मणे स्वाहा॥ ५
विश्वकर्मणे इदँ न मम॥

## ॥ इति चतुर्वेदीय विश्वकर्म संहिता यज्ञ काण्डः॥ ऋग सं ९९॥

## ॥ अथ चतुर्वेदीय विश्वकर्म संहिता ज्ञान काण्डः ४॥

### ॥ अथ प्रथमं अनुवाकः॥

### अथ विराट्पुरुष सूक्तम्॥ १॥

**ऋषिः नारायणः। छन्दः अनुष्टुप् । देवता विराट्पुरुषः॥**

सहस्रशीर्षा पुरुषः। सहस्राक्षस्सहस्रपात्।
स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्॥१
पुरुष एवेदँ सर्वम् । यद्भुतं यच्च भव्यम् ।
उतामृतत्वस्येशानः। यदन्नेनातिरोहति॥२
एतावानस्य महिमा। अतो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि॥३
त्रिपादूर्ध्व उदैत्पुरुषः। पादो ऽस्येहाभवात्पुनः।
ततो विश्वङ्व्यक्रामत्। साशनानशने अभि॥४

तस्माद्विराडजायत। विराजो अधि पूरुषः।
स जातो अत्यरिच्यत। पश्चाद्भूमिमथो पुरः॥५
यत्पुरुषेण हविषा। देवा यज्ञमतन्वत।
वसन्तो अस्यासीदाज्यम्। ग्रीष्म इध्मश्शरद्धविः॥६
सप्तास्यासन्परिधयः। त्रिस्सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वानाः। अबध्नन्पुरुषं पशुम्॥७
तं यज्ञं बर्हिषि प्रौक्षन्न्। पुरुषं जातामग्रतः।
तेन देवा अयजन्त। साध्या ऋषयश्च ये॥८
तस्माद्यज्ञात्सर्वहुतः। संभृतं पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यान्। आरण्यान् ग्राम्याश्च ये॥९
तस्माद्यज्ञात्सर्वहुतः। ऋचस्सामानि जज्ञिरे।
छन्दाँसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत॥१०
तस्मादश्वा अजातन्त। ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्। तस्माज्जाता अजावयः॥११
यत्पुरुषं व्यदधुः। कतिधा व्यकल्पयन्न्।
मुखं किमस्य कौ बाहू। कावूरू पादावुच्येते॥१२
ब्राह्मणोऽस्य मुखमासीत्। बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः। पद्भ्याँ शूद्रो अजायत ॥१३

चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत ।

मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत ॥१४

नाभ्या आसीदन्तरिक्षम् । शीष्णों द्यौस्समवर्तत ।

पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथा लोकाँ अकल्पयन् ॥१५

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे ।

सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदाऽऽस्ते ॥१६

धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्त्रः ।

तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥१७

यज्ञेन यज्ञमयजन्त देवाः । तानि धर्मामि प्रथमान्यासन् ।

ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ॥१८

## अथ परमात्मा सूक्तम् ॥ २ ॥

**ऋषिःविश्वरूपः उत्तरनारायण वा । छन्दः अनुष्टुप् । देवता परमात्माः ॥**

अद्भ्यस्संभूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्तताधि ।

तस्य त्वष्टा विदधद् रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे ॥ १

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।

तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय ॥ २

प्रजापतिश्चरति गर्भे अन्तः । अजायमनो बहुधा विजायते ।

यस्य धीराः परिजामन्ति योनिम् । **मरीचीनां** पदमिच्छन्ति वेधसः ॥ ३

यो देवेभ्य आतपति । यो देवानां पुरोहितः ।

पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये ॥ ४

रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन्न् ।

यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे ॥ ५

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् ।

अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥ ६

## अथ परमादित्य सूक्तम् ॥ ३ ॥

**ऋषिः विभ्राजः सूर्यः । छन्दः जगती । देवता परमादित्यः ॥**

विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपताव विह्रुतम् ।

वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोषा पुरुधा वि राजति ॥ १

विभ्राड् बृहत् सुभृतं वाजसातमं धर्मं न् दिवा धरुणे सत्यमर्पितम् ।

अमित्रहा वृत्रहा दस्युहंतमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ २

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।

विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ ३

**विभ्राजञ्ज्योतिषा** स्व १ **रगच्छो** रोचनं दिवः ।

येनेमा विश्वा भुवनान्याभृता **विश्वक र्मणा** विश्वदे व्यावता ॥ ४

## अथ परमेष्ठी सूक्तम् ॥ ४ ॥

**ऋषिः परमेष्ठीः प्रजापति । छन्दः त्रिष्टुप् । देवता परमेष्ठीः ॥**

अग्ने यशस्विन्यशसेममर्पयेन्द्रावतीचितीमिहाऽऽवह ।
अयम्मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तश्लोको अस्तु ॥ १
भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः ।
ततः क्षत्रं बलमोजश्च जातं अदस्मै देवा अभि सं नमन्तु ॥ २
धाता विधाता परमोत सन्दृक् प्रजापतिः परमेष्ठी विराजा ।
स्तोमास्छन्दाँसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम ॥ ३
अभ्यावर्तध्वमुप मेत साकमयꣳ शास्ताधिपतिर्वो अस्तु ।
अस्य विज्ञानमनु सꣳरभध्वमिमं पश्चादनु जीवाथ सर्वे ॥ ४
परमेष्ठ्य भिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः ।
सविता सन्याँ विश्वकर्मा दीक्षायां पूषा सोम क्रयण्यामिन्द्रश्च ।
विश्वकर्मा वयः परमेष्ठी छन्दः इति । ॐ शान्तिः शान्तिः शान्तिः ॥ ५

### ॥ अथ द्वितीय अनुवाकः ॥

## अथ हिरण्यगर्भ सूक्तम् ॥ ५ ॥

**ऋषिः हिरण्यगर्भः प्रजापतिः । छन्दः त्रिष्टुप् । देवता कः ॥**

**हिरण्यगर्भः** समवर्तताऽग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥१
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव।
य **ईशे** अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥२
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः।
यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥३
यस्येमे हिमवन्तो महित्वा यस्य समुद्रँ रसया सहाऽऽहुः।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम॥४
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षे तां मनसा रेजमाने।
यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम॥५
येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम॥६
आपो ह यन्महतीर्विश्वमायन्दक्षं दधाना जनयन्तीरग्निम्।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम॥७
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम्।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम॥८
मा नो हिँ सीज्जनिता यः पृथिव्या यो वा दिवँ सत्यधर्मा जजान।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम॥९

प्रजापते न त्वदेतान्यन्यः विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुजुमस्तन्नो असत वयँस्याम पतयो रयीणाम्॥१०

## अथ प्रजापति सूक्तम्॥ ६ ॥

**ऋषिः प्रजापतिः विश्वकर्मा। छन्दः त्रिष्टुप्। देवता प्रजापतिः॥**

प्रजापते न त्वदेतान्यन्यः। विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुजुमस्तन्नो असत। वयँस्याम पतयो रयीणाम्॥१
रयीणां पतिं यजतं बृहन्त म्। अस्मिन्भरे नृतमं वाजसातौ।
प्रजापतिं प्रेमजामृतस्य। यजाम देवमधि नो ब्रवीतु॥२
प्रजापते त्वं निधिपाः पुराणः। देवानां पिता जनिता प्रजानाम्।
पतिर्विश्वस्य जगतः परस्पाः। हविर्नो छेव विहवे जुषस्व॥३
तवेमे लोकाः प्रदिशो दिशश्च। परावतो निवत उद्वतश्च।
प्रजापते विश्वसृज्जीवधन्य इदं नो देव। प्रतिहर्य हव्यम्॥४
प्रजापतिं प्रथमं यज्ञियानाम्। देवानामग्रे यजतं यजध्वम्।
स नो ददातु द्रविणँ सुवीर्य म्। रायस्पोषं विष्यतु नाभिमस्मे॥५
यो राय **ईशे** शतदाय उक्थ्यः। यः **पशूनाँ** रक्षिता विष्ठितानाम्।
प्रजापतिः प्रथमजा ऋतस्य। सहस्रधामा जुषताँ हविर्नः॥६

यस्मान्न जातः परो अन्योऽस्ति । य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजयासँ विदानः । त्रीणिज्योतीँषि सचते स षोडशी ॥७
**प्रजापतिर्विश्वकर्मा** । तस्यमनो देवँ यज्ञेनराध्यासम् ।
अर्थेगा अस्यजहितः । अवसानपतेऽवसानम्मेविन्द ॥८

## अथ पशुपति सूक्तम् ॥ ७ ॥

**ऋषिः अथर्वणः भृगुः । छन्दः त्रिष्टुप् । देवता पशुपतिः ॥**

**प्रजापते**र्जायमानाः प्रजा जाताश्च या इमाः ।
ता अस्मै प्रति वेदय चिकित्वाꣳ अनु मन्यताम् ॥ १
**पशुपतेः** पशवो विश्वरूपाः सदृशा उत ।
तेषां यं वव्रिरे देवास्तꣳ स्वराडनु मन्यताम् ॥ २
प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यो अधिनिश्चरन्तम् ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ ३
ये बध्यामानमनु बध्यमाना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टाꣳ अग्रे प्र मुमोक्तु देवः **प्रजापतिः** प्रजया संविदानः ॥ ४
य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
वायुष्टाꣳ अग्रे प्र मुमोक्तु देवो **विश्वकर्मा** प्रजया संरराणः ॥ ५
**येषामीशे पशुपतिः** पशूनां चतुष्पाद उत ये द्विपाद ः ।

निष्क्रीतास्ते यज्ञियं भागं यन्तु रायस्पोषा यजमानं विशन्तु ॥ ६
प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतꣳ शशमानं यदस्थात् प्रियं देवानामप्येतु पाथः ॥ ७
नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥ ८
उपेत शमितारो देवानां दसितꣳ हविः ।
पशोः पाशं प्रमुञ्चत पाशं यज्ञपतेरधि ॥ ९

## अथ वाचस्पति सूक्तम् ॥ ८ ॥

**ऋषिः अथर्वाः ब्रह्मा ५ । छन्दः अनुष्टुप् जगती ५ । देवता वाचस्पतिः ॥**

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ १
पुनरोहि वाचस्पते देवेन मनसा सह ।
वसोष्पते नि रमय मय्येवास्तु मयि श्रुतम् ॥ २
इहैवाभि वि तनूभे आर्त्नी इव ज्यया ।
वाचस्पतिर्नि यछतु मय्येवास्तु मयि श्रुतम् ॥ ३
उपहूतो वाचस्पतिरुपास्मान् वाचस्पतिर्ह्वयताम् ।
सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि ॥ ४

वाचस्पत ऋतवः पंच ये नौ वैश्वकर्मणाः परि ये सं बभूवुः ।
इहैवा प्राणः सरव्ये नो अस्तु तं त्वा परमेष्ठिन्परि रोहित आयुषा वर्चसा दधातु ॥ ५

## ॥ अथ तृतिय सूक्तम् ॥

### अथ परब्रह्म सूक्तः ॥ ९ ॥

**ऋषिः दीर्घतमः आंगिरसः । छन्दः त्रिष्टुप् । देवता परब्रह्माः ॥**

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः ।
यस्तं न वेद किं ऋचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ १
छन्दाꣳसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः ॥२
मायां तु प्रकृतिं विद्यान्मायिनं तु **महेश्वरम्** ।
तस्यावयवभूतैसतु व्याप्तं सर्वमिदं जगत् ॥ ३
यो योमिं योनिमधितिष्ठत्येको यस्मिन्निदं स च वि चैति सर्वम् ।
**तमीशानं** वरदं देवमीड्यं निचाय्योमां शान्ति मत्यन्तमेति ॥ ४
यो देवानां प्रभवश्चोद् भवश्च विश्वाधिपो रुद्रो महऋषिः ।
**हिरण्यगर्भं** पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥ ५
यो देवानामधिपो यस्मिँ लोका अधिश्रिताः ।
य **ईशे** अस्य द्विपदश्चतुष्पदः कस्मै देवाया हविषा विधेम ॥६

सूक्ष्माति सूक्ष्मं कलिलस्य मध्ये विश्वस्य स्त्रष्टारमनेक रूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा **शिवं** शान्तिमत्यन्तमेति ॥७
स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन्युक्ता **ब्रह्मऋषियो** देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥८
घृतात्परं मण्डमिवाति सूक्ष्मं ज्ञात्वां **शिवं** सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥९
एष देवा **विश्वकर्मा महात्मा सदा** जनानां हृदयेसन्निविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरास्ते भवन्ति ॥१०

## अथ ब्रह्मात्म सूक्त्तम् ॥ १० ॥

**ऋषिः वेनः भार्गवः । छन्दः त्रिष्टुप् । देवता ब्रह्मात्माः ॥**

एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ् मुख स्तिष्ठति **सर्वतोमुखः** ॥१
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावापृथिवी **जनयन्देव एकः** ॥२
**वेन**स्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीडम् ।
यस्मिन्निदꣳ सं च वि चैकꣳ स ओतः प्रोतश्च विभुः प्रजासु ॥३
प्र तद्वोचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहासु ।

**त्रीणि पदा** निहिता गुहासु यस्तद्वेद सवितुः पिता सत् ॥४

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।

यत्र देवा अमृतत्वमानशानास्तृतीये धामान्यभ्यैरयन्त ॥ ५

परि द्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः ।

ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तत्प्रजासु ॥६

परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च ।

**प्रजापतिः** प्रथमजा ऋतस्यात्मनाऽऽत्मानमभिसंबभूव ॥७

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्य म् । सनिं मेधामयासिषम् ॥८

## अथ भुवनस्पति सूक्तम् ॥ ११ ॥

**ऋषिः भुवनः प्रजापतिः । छन्दः त्रिष्टुप् । देवता विश्वकर्मा ॥**

हरिः ॐ । **वैश्वकर्मणो देवानां नु वयं जाना ।**

**नासीदासीन्नो सदासीत्तदानी म् ।** नासीद्रजो नो व्योमापरो यत् ।

किमावरीवः कुह कस्य शर्मन् ।अम्भः किमासीद्गहनं गभीरम् ॥१

न मृत्युरमृतं तर्हि न । रात्रिया अह्न आसीत्प्रकेतः ।

आनीदवातँ स्वधया तदेक म् । तस्माद्धान्यं न परः किंच नास ॥२

तम आसीत्तमसा गूढमग्रे प्रकतम् । सलिलँ सर्वमा इदं ।

तुच्छेनाभ्वपिहितं यदासीत् । तमसस्तन्महिना जायतैक म् ॥३

कामस्तदग्रे **समवर्तताधि** । मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् । हृदि प्रतिष्या कवयो मनीषा ॥४
तिरश्चीनो विततो रश्मिरेषाम् । अधास्स्विदासी३दुपरि स्विदासी३त् ।
रेतोधा आसन्महिमान आसन् । स्वधा अवस्तात्प्रयतिः परस्तात् ॥५
को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनाय । अथा को वेद यत आ बभूव ॥६
इयं विसृष्टिर्यत आबभूव । यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः **परमे** व्योमन् । सो अङ्गवेद यदि वा न वेद ॥७
किँ स्विद्वनं क उ स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तत् । यदध्यतिष्ठद् भुवनानि धारयन् ॥८
ब्रह्म वनं ब्रह्म स वृक्ष आसीत् । यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि व । **ब्रह्माध्यतिष्ठद्** भुवनानि धारयन् ॥९

## अथ ब्रह्म सूक्तम् ॥ १२ ॥

**ऋषिः वेनः भार्गवः । छन्दः त्रिष्टुप् । देवता ब्रह्मा ॥**

ब्रह्म जज्ञानं प्रथमं पुरस्तात् । वि सीमतः सुरुचो वेन आवः ।
स बुध्निया उपमा अस्य विष्ठाः । सतश्च योनिमसतश्च विवः ॥ १
पिता विराजामृषभो रयीणाम् । अन्तरिक्षं विश्वरूप आविवेश ।

